दीर्घाज्जसि इचि च (७२) परे प्रथमयोः पूर्वसवर्णदीर्घो न स्यात् । वृद्धिः । विश्वपौ । सवर्णदीर्घः । विश्वपाः । यद्यपोह औङि नादिचीत्येव(७७पृ०)सिद्धं जसि तु सत्यपि पूर्वसवर्णदीर्घे क्षतिर्नास्ति । तथापि गौर्यौ गौर्यः इत्याद्यर्थं सूत्रमिहापि न्याय्यत्वादुपन्यस्तम् ।

**आतो धातोः । ६ । ४ । १४० ।**

आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः स्यात् । अलोऽन्त्यस्य (२८पृ०) । विश्वपः । विश्वपाभ्यामित्यादि । एवं शङ्खध्मादयः । धातोः किम् । हाहान् । टासवर्णदीर्घः । हाहा । ङे वृद्धिः । हाहै । ङसिङसोर्दीर्घः । हाहाः२ । ओसि वृद्धिः हाहौः । ङौ आद्गुणः(४२पृ०) । हाहे । शेषं विश्वपावत् । आत इति योगविभागादधातोरप्याकारलोपः क्वचित् अः । क्वः । इत्यादन्ताः । हरिः । प्रथमयोःपूर्वसवर्णः (७७पृ०) हरी ।

**जसि च । ७ । ३ । १०९ ।**

ह्रस्वान्तस्याङ्गस्य (७३) गुणः स्याज्जसि परे । हरयः ।

**ह्रस्वस्य गुणः । ७ । ३ । १०८ ।**

---

(७२) चकारात् नादिचीत्यतो (७७पृ०) नेतीति इचीति च प्रथमयोरिति (७७पृ०) चैतस्यानुवर्त्तत इत्यादि ।

(७३) जसि चेत्यत्र ह्रस्वस्य गुण इत्यनुवर्त्तते ह्रस्वान्तस्येत्यादि ।

ह्रस्वस्य गुणः स्यात्सम्बुद्धौ(७४)। एङ्ह्रस्वादिति(८८पृ०)सम्बुद्धिलोपः। हे हरे। हरिम्। हरी। हरीन्।

## शेषो घ्यसखि ।१।४।७।

अनदीसंज्ञौ (७५) ह्रस्वौ याविवर्णोवर्णौ तदन्तं सखिवर्जं घिसंज्ञं स्यात्। शेषः किम्। मत्यै। एकसंज्ञाधिकारात्सिद्धे शेषग्रहणं स्पष्टार्थम् (७६)। ह्रस्वौ किम्। वातप्रम्ये। यू किम्। मात्रे।

## आङो नाऽस्त्रियाम् (७७) ।७।३।१२०।

घेः परस्याङो ना स्यादस्त्रियाम्। आङिति टासंज्ञा प्राचाम्। हरिणा। अस्त्रियां किम्। मत्या।

## घेर्ङिति (७८) ।७।३।१११।

घिसंज्ञस्य ङिति सुपि गुणः स्यात्। हरये। घेः किम्। सख्ये। ङिति किम्। हरिभ्याम्। सुपि किम्। पट्वी। घेर्ङितीति गुणे कृते।

---

(७४) ह्रस्वस्येति सम्बुद्धौ चेत्यतः(१२७पृ०) सम्बुद्धावित्यनुवर्त्यात्र सम्बुद्धाविति।

(७५) यूस्त्र्याख्याविवत्यतो(११६पृ०) यू इत्यनुवर्त्य शेषपदार्थमाहानदीसंज्ञाविति।

(७६) स्पष्टार्थमिति कडाराः कर्मधारये (२६५पृ०) इत्येतत्पर्यन्तस्य बुद्धिस्थत्वात् स्पष्टतया तल्लाभार्थमित्यर्थः।

(७७) आङो नेति। अत्र घेरित्यतो (११०पृ०) घेरित्यनुवर्त्तते ना पुंसीति तु नोक्तम् अमुना कुलेनेत्यत्र उपस्थाभिवृतया इकोऽचीति (१४२पृ०) नुमोऽप्रसङ्गेन पुंस्त्वाभावेन नाकाराप्रवृत्तौ तद्रूपासिद्धेरिति बोध्यम्।

(७८) घेर्ङितीति। सुपि चेत्यतः (९२पृ०) सुपीत्यनुवर्त्तते तेन पट्वीत्यादौ ङीबादीनां ङित्त्वेऽपि सुप्त्वाभावान्न प्रसङ्गः।

**ङसिङसोश्च । ६ । १ । ११० ।**

एङो (७९) ङसिङसोरतिपरे पूर्वरूपमेकादेशः स्यात् । हरेः । हरेः । हर्य्योः हरीणाम् ।

**अच्च घेः (८०) । ७ । ३ । ११९ ।**

इदुद्भ्यामुत्तरस्य ङेरौ स्यात् घेरन्तादेशश्चाकारः । हरौ । हर्य्योः । हरिषु । एवं श्रीपत्यग्निरविकव्यादयः ।

**अनङ् सौ (८१) । ७ । १ । ९३ ।**

सख्युरङ्गस्यानङादेशः स्यादसम्बुद्धौ सौ परे । ङिच्चेत्यन्तादेशः (२९पृ०) ।

**अलोऽन्त्यात् पूर्व्व उपधा । १ । १ । ६५ ।**

अन्त्यादलः पूर्वो वर्ण उपधासंज्ञः स्यात् ।

**सर्व्वनामस्थाने चाऽसम्बुद्धौ । ६ । ४ । ८ ।**

---

(७९) ङसीति एङः पदान्तादतीति (५०पृ०) सूत्रम् अमिपूर्वः (६०पृ०) इत्यतः पूर्व इति चानुवर्त्त्येह एङ इत्यादि ।

(८०) अच्च घेरिति । इदुद्भ्यामिति (१२०पृ०) औदिति च (११२पृ०) सूत्रद्वयमनुवर्त्त्य योजयन्तीह इदुद्भ्यामित्यादि ।

(८१) अनङ् साविति सख्युरसम्बुद्धाविति (१११पृ०) सूत्रमनुवृत्तं तेन चासम्बुद्धाविति पर्य्युदासात् सूत्रे साविति प्रथमैकवचनपरम् न तु सप्तम्येकवचनपरम् । अनङि्श्चात्र नकारोपरि अकारस्त्वानुनासिकत्व-प्रतिज्ञानादित्त्वम् ।

नान्तस्योपधाया दीर्घः (८२) स्यादसम्बुद्धौ सर्वनामस्थाने

**अपृक्त एकाल् प्रत्ययः । १ । २ । ४१ ।**

एकाल्प्रत्ययो यः सोऽपृक्तसंज्ञः स्यात् ।

**हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् । ६ । १ । ६८ ।**

हलन्तात्परम्दीर्घौ यौ ङ्यापौ तदन्ताच्च परं सुतिसीत्येतदपृक्तं हल् लुप्यते । हल्ङ्याब्भ्यः किम् । ग्रामणीः । दीर्घात् किम् । निष्कौशाम्बिः । अतिखट्वः । सुतिसीति किम् । अभैत्सीत् । तिपा सहचरितस्य ग्रहणात्सिपोग्रहणमस्ति । अपृक्तमिति किम् । बिभर्त्ति । हल्किम् । बिभेद । प्रथमहल्किम् । राजा । नलोपो न स्यात् ❀ संयोगान्तलोपस्यासिद्धत्वात् । सखा । हे सखे ।

**सख्युरसम्बुद्धौ । ७ । १ । ९२ ।**

सख्युरङ्गात्परं सम्बुद्धिवर्जं सर्वनामस्थानं णिद्वत् (८३) स्यात् ।

**अचो ञ्णिति । ७ । २ । ११५ ।**

ञिति णिति च परेऽजन्ताङ्गस्य वृद्धिः (८४) स्यात् । सखायौ ।

---

(८२) सर्वनामेति । [illegible] इत्यतो (८०पृ०) दीर्घ इति नोपधाया इति (१६२पृ०) [illegible] ।

❀ संयोगान्तलोपेन [illegible] नलोपो नेति ।

(८३) गोतो णिदित्यतो (१५५पृ०) णिदित्यनुवर्त्तते णिद्वदिति ।

(८४) मृजेर्वृद्धिरित्यतो (७०।२२पृ०) वृद्धिरित्यनुवर्त्तते वृद्धिरिति ।

सखायः। सखायम्। सखायौ। (१०९पृ०) घिसंज्ञाऽभावान्न तत्कार्य्यम्। सख्या। सख्ये।

**ख्यत्यात्परस्य (८५)। ६। १। ११२।**

खितिशब्दाभ्यां खीतीशब्दाभ्यां कृतयणादेशाभ्याम्परस्य ङसिङसोरत उत् स्यात्। सख्युः। सख्युः।

**औत्। ७। ३। ११८।**

इदुद्भ्यां (८६) परस्य ङेरौत् स्यात्। उकाराऽनुवृत्तिरुत्तरार्था। सख्यौ। शेषं हरिवत्। शोभनः सखा सुसखा सुसखायौ सुसखायः। अनङ्णिद्वद्भावयोराङ्गत्वात्तदन्तेऽपि प्रवृत्तिः। समुदायस्य सखिरूपत्वाभावादसखीति (८७)निषेधाऽप्रवृत्तेर्घिसंज्ञा। सुसखिना। सुसखये। ङसिङसोर्गुणे कृते कृतयणादेशत्वाभावात् ख्यत्यादित्युत्त्वं न। सुसखेः। सुसखौ इत्यादि। एवमतिशयितः सखा। अतिसखा। परमः सखा यस्येति विग्रहे। परमसखा। परमसखा-

---

(८५) ख्यत्यादिति खयोत्यकारपर उकारश्चार्थः अत उदित्वतः (१२२पृ०) उदिति एङः पदान्तादतीत्यतः (५०पृ०) अतीति ङसिङसोश्चेति (११०पृ०) ङसिङसोरित्यनुवर्त्ततीति विभक्तिं विपरिणमय्य ङसिङसोरत उदिति।

(८६) इदुद्भ्यामिति (१२२पृ०) अनुवर्त्तते इदुद्भ्यामिति उदुपधस्य अर्थत्वाद्द्वाभ्यामोत्तरार्थेति औतो विभक्तित्वेऽपि न विभक्तौ तुस्मा (८८पृ०) इत्यनुनासिकतायाः प्राप्तत्वात् तकारस्योच्चारणार्थमेवोच्चारणात् तकारस्येत्त्वम्।

(८७) असखीति निषेधाप्रवृत्तेरिति शेषोघ्यसखीति (१०९पृ०) सूत्रस्य असखीति निषेधस्याविषयत्वादित्यर्थः।

वादित्यादि। गौणत्वेऽप्यनङ्णित्वे प्रवर्त्तेते। सखीमतिक्रान्तोऽतिसखिः लिङ्गविशिष्टपरिभाषाया अनित्यत्वाच्च (२८४पृ०) टच्। हरिवत्। इहानङ्णित्वे न भवतः गोस्त्रियोरिति(३२२पृ०)ह्रस्वत्वेन सखिशब्दस्य लाक्षणिकत्वात् लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणात्।

## पतिः समास एव (८८)। १। ४। ८।

पतिशब्दः समास एव घिसंज्ञः स्यात्। पत्या। पत्ये। पत्युः २। पत्यौ। शेषं हरिवत्। समासे तु। भूपतिना। भूपतये। कतिशब्दो नित्यं बहुवचनान्तः (८९)।

## बहुगणवतुडति (९०) संख्या। १। १। २३।

एते संख्यासंज्ञाः स्युः।

---

(८८) पतिः समास एवेति। शेषो घ्यसखीति सूत्रात् (१०९पृ०) घीत्यनुवर्त्याऽऽह घिसंज्ञ इति। एवकारः साधुत्वावधारणार्थः इतिपुराणेषु पतये सखिनेत्यादिप्रयोगस्यासाधुत्वेऽपि लिपिकृद्व्याख्यायाज्ञानादाविव तत्तत्प्रयोक्तॄणां माहात्म्येनैव दोषाभावस्तेषामेव तपोबलात्तदध्ययनकालेऽस्माकं न दोषः स्वातन्त्र्येणासाधूनामुच्चारणेऽस्माकं दोष इति नदीसंज्ञासूत्रभाष्ये स्पष्टम्। शब्देन्दु०।

(८९) कतिशब्द इति किमः संख्यापरिमाणे इतरच्च(११८पृ०) बहुत्वसंख्यावच्छिन्नसंख्येयविशेषप्रश्ने एव डतिप्रत्यय इतिभाष्ये उक्तत्वादिति भावः।

(९०) बहुगणयोर्नियतविषयगतपरिच्छेदहेतुत्वाभावेनासंख्यात्वादतिदेशार्थं बहुगणेति सूत्रं नित्यादिव्यापकधर्मविशेषो बहुत्वादि तत्सिद्धेर्वा-ऽतिदेशो न बहुवैपुल्यार्थे इति बोध्यम् अत्र वतुग्रहणात् तद्धित एव डतिर्नतु पातेर्डतिरित्युणादिकोऽपीति बोध्यम्।

**डति च (८१) । १ । १ । २५ ।**

डत्यन्ता संख्या षट्संज्ञा स्यात् ।

**प्रत्ययस्य (८२) लुक्श्लुलुपः । १ । १ । ६१ ।**

लुक्, श्लु, लुप् एतैः शब्दैः कृतं प्रत्ययादर्शनं क्रमात्तत्तत्संज्ञं स्यात् ।

**षड्भ्यो लुक् (८३) । ७ । १ । २२ ।**

षड्भ्यः परयोर्जश्शसोर्लुक् स्यात् ।

**प्रत्ययलोपे (८४) प्रत्ययलक्षणम् ।१।१।६२।**

प्रत्यये लुप्तेऽपि तदाश्रितं कार्यं स्यात् । इति । जसि चेति (१०८पृ०) गुणे प्राप्ते ।

**न लुमताऽङ्गस्य । १ । १ । ६३ ।**

लुक्श्लुलुप् एते लुमन्तः । लुमता शब्देन लुप्ते तन्निमित्तम-

---

(८१) डति चेति ष्णान्ताः षट् (१६२पृ०) षडिति बहुगणवतुडति (११२पृ०) संख्येति चानुवर्त्याऽऽह संख्येति ।

(८२) प्रत्ययस्येति अदर्शनं लोपः (२६पृ०) इत्यतोऽदर्शनमनुवर्त्याऽऽह प्रत्ययस्यादर्शनमिति लोपात् पृथक् संज्ञा प्रत्ययाश्रयकार्यार्था ।

(८३) षड्भ्य इति । जश्शसोः शिरित्यतो (१३८पृ०) जश्शसोरित्यनुवर्त्तते । इदञ्च गौणे न प्रवर्त्तते इति भाष्ये स्थितम् ।

(८४) प्रत्ययलोप इति प्रत्ययस्यानुवृत्त्या लाभेऽपि पुनर्ग्रहणं तदवयवे यथा न स्यादिति । लक्षणमिति विशेषाभिधानात् प्रत्ययनिमित्तकमेव कार्यम् न तु प्रत्ययस्यानिमित्तकमिति विशेषोऽवगन्तव्यः ।

ङ्कार्य्यं न स्यात्। कति२। कतिभिः। कतिभ्यः २। कतीनाम्। कतिषु। अस्मद्युष्मत्षट्संज्ञकास्त्रिषु सरूपाः (८५)। त्रिशब्दो नित्यं बहुवचनान्तः। त्रयः। त्रीन्। त्रिभिः। त्रिभ्यः २।

## त्रेस्त्रयः। ७। १। ५३।

त्रिशब्दस्य त्रयादेशः स्यादामि। त्रयाणाम्। परमत्रयाणाम्। गौणत्वे तु नेति केचित्। प्रियत्रीणाम्। वस्तुतस्तु प्रियत्रयाणाम्। त्रिषु। द्विशब्दो द्विवचनान्तः।

## त्यदादीनामः (८६)। ७। २। १०२।

एषामकारोऽन्तादेशः स्याद्विभक्तौ। (८७पृ०)द्विपर्य्यन्तानामेवेष्टिः (८७)। द्वौ२। द्वाभ्यां३। द्वयोः२। द्विपर्य्यन्तानामिति किम्। भवान्। भवन्तौ। भवन्तः। संज्ञायाम्, उपसर्ज्जनत्वे च नात्वम् सर्व्वाद्यन्तर्गणकार्य्यत्वात्। द्विर्नाम कश्चित्। द्विः। द्वौ। द्वयः। द्वावतिक्रान्तोऽतिद्विः। हरिवत्। प्राधान्ये तु परमद्वौ इत्यादि। औडुलोमिः। औडुलोमी।' उडुलोमाः)। लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः*। बाह्वादीञो (४८८पृ०)ऽपवादः। औडुलोमिम्। औडुलोमी। उडुलोमान्।

---

(८५) सरूपा इति लिङ्गविशेषबोधकाकारोत्पत्त्या अविशिष्टा। पदान्तर-सन्निधानं विनाऽवधारे लिङ्गविशेषबोधकत्वविरहात्।

(८६) त्यदादीनाम इति। अदन्ता विभक्तावित्यतो (११२पृ०) विभक्ता-विति वर्त्तते आदेशे अवर्णपदस्याभावादाकार इति।

(८७) इष्टिर्भाष्यकारादीनामिच्छा।

इतीदन्ताः वातप्रमीरिति उणादिसूत्रेण (उ०४।१२पृ०) माङ ई-प्रत्ययः कित्(६८)। वातम्प्रमिमीते इति वातप्रमीः। दीर्घाज्जसि च(१०७पृ०)।वातप्रम्यौ। वातप्रम्यः। हे वातप्रमीः।अमिपूर्वः (६०पृ०)। वातप्रमीम्। वातप्रम्यौ। वातप्रमीन्। वातप्रम्या। वातप्रमीभ्याम्। वातप्रम्ये। वातप्रम्यः २। वातप्रम्योः। वातप्रम्याम्। दीर्घत्वान्न नुट्। ङौ तु सवर्णदीर्घः। वातप्रमी। वातप्रमीषु। एवं ययीपप्यादयः। यात्यनेनेति ययीर्मार्गः। पाति लोकमिति पपीः सूर्य्यः। यापोः किद्द्वे चेति(उ०४१२पृ०)ईप्रत्ययः। क्विबन्तवातप्रमीशब्दस्य तु अमि शसि ङौ च विशेषः। वातप्रम्यम्। वातप्रम्यः। वातप्रम्यि। एरनेकाच इति (११८पृ०) वक्ष्यमाणो यण् प्रधीवत्। बह्व्यः श्रेयस्यो यस्य स बहुश्रेयसी(६६)। दीर्घङ्यन्तत्वाद्धल्ङ्याविति (१२१पृ०) सुलोपः।

## यू स्त्र्याख्यौ (१००) नदी। १। ४। ३।

ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः। प्रथमलिङ्गग्रहणञ्च।*। पूर्वस्त्र्याख्यस्योपसर्जनत्वेऽपि नदीत्वं वक्तव्यमित्यर्थः।

---

(६८) किदिति। तेन आतो लोप इटि चेति (७६४पृ०) आलोपः।

(६६) बहुश्रेयसीति ईयसश्चेति (४२६पृ०) न कप् ईयसोपसर्जनत्वेनेति नाप्राप्तमिति (४२७पृ०) गोपसर्जनमहत्त्व इति द्रष्टव्यम्।

(१००) यू स्त्र्याख्याविति। ईश्च ऊश्च अविभक्तिकत्वेन निर्देशात् यू इति। स्त्रियाविति वक्तव्ये स्त्र्याख्यावित्युक्तिर्नित्यस्त्रीत्वकथनार्थम्।

अम्बार्थ (१०१) नद्योर्ह्रस्वः। ७। ३। १०७।

अम्बार्थानां नद्यन्तानां च ह्रस्वः स्यात् सम्बुद्धौ। हे बहुश्रेयसि। शसि बहुश्रेयसीन्।

आण्नद्याः। ७। ३। ११२।

नद्यन्तात्परेषां ङितामाट् (१०२) आगमः स्यात्।

आटश्च (१०३)। ६। १। ९०।

आटोऽचि परे वृद्धिरेकादेशः स्यात्। बहुश्रेयस्यै। बहुश्रेयस्याः २। नद्यन्तात्परत्वान्नुट्। बहुश्रेयसीनाम्।

ङे (१०४) राम्नद्याम्नीभ्यः। ७। ३। ११६।

नद्यन्तादाबन्तान्नीशब्दाच्च ङेराम् स्यात्। इह परत्वादाटा नुट् बाध्यते (१०५)। बहुश्रेयस्याम्। शेषमीप्रत्ययान्तवात्प्रमीवत्। अङ्यन्तत्वान्न सुलोपः। अतिलक्ष्मीः।

---

(१०१) अम्बेति सम्बुद्धौ चेत्यतः (१२७पृ०) सम्बुद्धावित्यनुवर्त्तते। इह ह्रस्व-ग्रहणसामर्थ्यात् गुणो न प्रवर्त्ततेऽन्यथा गुण एवोच्येत।

(१०२) घेर्ङितीत्यतो (१०८पृ०) ङितीत्यनुवर्त्त्य विभक्तिं विपरिणमय्य च ङितामिति।

(१०३) आटश्चेति। इको यणचीत्यतोऽचीति (२२पृ०) वृद्धिरेचीत्यतो वृद्धिरिति (४२पृ०) चानुवर्त्त्याऽऽटोऽचि परे इत्यादि।

(१०४) ङेरिति सप्तम्येकवचनं न तु ङेर्य (९१पृ०) इतिवत्षष्ठ्येकवचनं लिघ्वतरोः, ङिवामिति (१२२पृ०) निर्देशात्।

(१०५) आटा नुट् बाध्यते इति कृते तु आटि पश्चात् न प्रवर्त्तते सकृद्गति-न्यायादिति बोध्यम्।

प्रेयच्छ्रेयसीवत् । कुमारीमिच्छन् कुमारीवाचरन्वा ब्राह्मणः । कुमारी (१०६) । क्यजन्तादाचारक्विबन्ताद्वा कर्त्तरि क्विप् । हल्ङ्याबिति (१११पृ०) सुलोपः ।

अचि (१०७) श्नुधातुभ्रुवां य्वोरियङुवङौ । ६ । ४ । ७७ ।

श्नुप्रत्ययान्तस्य इवर्णोवर्णान्तधातोर्भ्रू इत्यस्य चाङ्गस्य इयङुवङौ स्तोऽजादौ प्रत्यये परे । ङिच्चेति (२८पृ०) अन्तादेशः । आन्तरतम्यात् (२७पृ०) एरियङ् ओरुवङ् । इतीयङि प्राप्ते ।

एर(१०८)नेकाचोऽसंयोगपूर्वस्य । ६ । ४ । ८२ ।

धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तो यो धातुस्तदन्तस्याऽनेकाचोऽङ्गस्य यण् स्यादजादौ प्रत्यये परे । इति यण् । कुमार्य्यौ । कुमार्य्यः । हे कुमारि । अमि शसि च । कुमार्य्यम् । कुमार्य्यः । कुमार्य्यै । कुमार्य्याः २ । कुमारी-

(१०६) कुमारीति क्विबन्तं प्रति ङ्यन्तस्योपसर्जनत्वेऽपि न ह्रस्वः गोस्त्रियोरुपसर्जनस्येति(२२२पृ०)सूत्रे प्रातिपदिकोपसर्जनस्यैव ह्रस्वविधानात् एतच्च प्रधानत्वमात्रं नतूपसर्जनत्वं केनचित् सूत्रे च विहितमिति विशेषः तेन हरीतक्याः फलानीति वाक्ये तद्धितलुपि हरीतक्या अप्रधानत्वेऽपि न ह्रस्वः ।

(१०७) अचीति । य्वोरिति धातोरेव विशेषणं योग्यत्वात्तच्च श्नुभ्रुवोरित्याशयेनाह इवर्णोवर्णान्तधातोरिति ।

(१०८) एरिति इको यणचीति (२२पृ०) यणिति अचि श्नु इत्यतोऽचीति धातुत्वं च योग्यत्वादनुवर्त्तते इत्याह धात्ववयव इति ।

ण्याम्। कुमार्य्याम्। कुमार्य्योः। प्रधीः(१०९)। प्रध्यौ। प्रध्यः। प्रध्यम्। प्रध्यः। उन्नयतीत्युन्नीः। धातुना संयोगस्य विशेषणादिह स्यादेव यण्। उन्न्यौ उन्न्यः। हे उन्नीः। उन्न्यम्। ङेराम्। उन्न्याम्। एवं ग्रामणीः (११०)। अनेकाचः किम्। नीः। नियौ। नियः। अमि शसि च परत्वादियङ्। नियम्। नियः। ङेराम्। नियाम्। असंयोगपूर्वस्य किम्। सुश्रियौ। यवक्रियौ। गति (१११) कारकेतरपूर्वपदस्य यण् नेष्यते*। शुद्धधियौ। परमधियौ। कथं (११२) तर्हि दुर्धियो वृश्चिकभियेत्यादि। उच्यते। दुःस्थिता (११३) धीर्य्येषामिति विग्रहे दुरित्यस्य धीशब्दम्प्रति गतित्वमेव नास्ति। यत्क्रियायुक्ताः प्रादयस्तम्प्रत्येव गत्युपसर्गसंज्ञाः। वृश्चिक-

---

(१०९) प्रधीरिति प्रकृष्टं ध्यायतीति कर्त्तरि क्विप्, प्रधीरिति प्रकृष्टा धीर्यस्येति विग्रहे तु धीशब्दस्य नित्यस्त्रीत्वात् प्रथमलिङ्गग्रहणञ्चेति (११६पृ०) नद्या नदीत्वादाडाद्य यथायथं कार्य्यमिति विशेषः।

(११०) अग्रग्रामाभ्यां नयतेरिति णत्वम्।

(१११) गतीति गतिकारकपूर्वपदकभिन्नस्य न भवतीति निषेधार्थे इत्यर्थः शुद्धधियाविति शुद्धा धीर्ययोरिति विग्रहे भावक्विबन्तधीशब्दस्य बहुव्रीहिणा तद्विशेषणस्य शुद्धस्य ध्यानक्रियाविशेषणत्वाभावेनाकारकत्वात् न यण्। शुद्धं ध्यायतीति वाक्ये तु कारकेति विशेषः। प्रकृष्टं ध्यायतीति वाक्ये तु प्रकर्षः ध्यानक्रियाया एवेति गतित्वमिति बोध्यम्।

(११२) कथमिति दुष्टं ध्यायन्तीति दुर्धियो वृश्चिकभियेत्यादि विग्रहाभिप्रायेण प्रश्नः।

(११३) दुःस्थितेति दुःशब्दो धात्वर्थस्थितार्थे विशेषणं न तु धीशब्दार्थे, इति तत्क्रियायां गतित्वमिति भावः।

ग्रन्थस्य बुद्धिकृतमपादानत्वं नेह (११४) विवक्षितम् । वृश्चिक-सम्बन्धिनी (११५) भीः वृश्चिकभीरित्युत्तरपदलोपो वा ।

## न भूसुधियोः (११६) । ६ । ४ । ८५ ।

एतयोर्यण् न स्यादचि सुपि । सुधियौ । सुधियः इत्यादि । सखायमिच्छति सखीयति ततः क्विप् । अल्लोपयलोपौ । अल्लोपस्य स्थानिवत्त्वाद्यणि प्राप्ते । क्वौ लुप्तं न स्थानिवत्* । एकदेशविकृतस्याऽनन्यतयाऽनङ्णित्त्वे । सखा । सखायौ । सखायः । हे सखीः । अमि पूर्वरूपात्(६०पृ०)परत्वाद्यणि प्राप्ते । ततोऽपि परत्वात्सख्युरसम्बुद्धाविति(१११पृ०)प्रवर्त्तते । सखायम् । सखायौ । ङसि यण् । सख्यः । सह खेन वर्त्तत इति सखः । तमिच्छतीति । सखीः । सुखमिच्छतीति । सुखीः । सुतमिच्छतीति । सुतीः । सख्यौ । सुख्यौ । सुत्यौ । ख्यत्यादिति(११२पृ०)दीर्घस्याऽपि ग्रहणादुकारः । सख्युः । सुख्युः । सुत्युः । लूनमिच्छतीति लूनीः । क्षाममिच्छतीति क्षामीः । प्रस्तीममिच्छतीति प्रस्तीमीः । एषां ङसिङसोर्यण् । नत्वमत्वयोरसिद्धत्वात् ख्यत्यात्(११२पृ०)इत्युत्वम् । लून्युः । क्षाम्युः ।

---

(११४) नेहेति । ततश्च [illegible] समासः ।

(११५) वृश्चिकसम्बन्धिनीति पूर्वपदोत्तरपदलोपः शाकपार्थिवादित्वादिति भावः ।

(११६) न भूसुधियोरिति यद्विशुद्धतया प्रथमोपस्थितत्वात् परत्वेऽपि च इति (११८पृ०) ओः सुपीति (१२३पृ०) एतावेवेदं बाधते ।

प्रधीभ्यः । शुष्कीयते । शुष्कीः (११७) । पक्वीः । इयङ् । शुष्कियौ । शुष्कियः । ङसिङसोः शुष्कियः इत्यादि । इति ईदन्ताः । शम्भुर्हरिवत् । एवं विष्णुवायुभान्वादयः ।

## तृज्वत् क्रोष्टुः (११८) । ७ । १ । ९५ ।

क्रोष्टुस्तृजन्तेन तुल्यं वर्त्तते असम्बुद्धौ सर्वनामस्थाने परे क्रोष्टुशब्दस्थाने क्रोष्टृशब्दः प्रयोक्तव्य इत्यर्थः ।

## ऋतो ङि सर्वनामस्थानयोः ।७। ३ । ११० ।

ङौ सर्वनामस्थाने च परे ऋदन्ताऽङ्गस्य गुणः (११९)स्यात् । इति प्राप्ते ।

## ऋदुशनस्पुरुदंसोऽनेहसाञ्च ।७।१ ।९४।

---

(११७) शुष्कीरिति शुषः क्तः पचो व इति निष्ठा तस्य कत्ववत्वे । धातोः संयोगपूर्व्वत्वात् यणिति (११८सू०)प्राप्तत्वाभावेन न उदिति बोध्यम् ।

(११८) क्रुश आह्वाने रोदने चेत्यस्मात् सितनिगमीत्यादिना (उ०१८७सू०) औणादिके तुनि क्रोष्टुशब्दः तृचि तु क्रोष्टृशब्दः द्वावपि शृगालवाचकौ द्वयोरप्यविशेषेण सर्व्वत्र प्रयोगे प्राप्ते असम्बुद्धिसर्व्वनामस्थाने स्त्रियाञ्च तृजन्त एव तृतीयाद्यचि तु उभयमन्यत्र शसादौ तुन्नन्त एवेति प्रयोगनियमार्थं त्रिसूत्री प्रवर्त्तते । क्रोष्टुरिति प्रथमैकवचनम् । प्राधान्यात् व्याख्यानाच्च रूपातिदेशार्थं वचनमिति बोध्यम् । सर्व्वनामस्थाने चासम्बुद्धाविति (११०सू०) तृड्वदित्यनुवर्त्तत इति व्याख्यानात् ।

(११९) अत्र इति अदेङ् गुण इत्यनेन (१०८सू०) गुणसंज्ञकवर्णे ते तपरकरणमनुनासिकदीर्घप्लुतवारणार्थम् ।

ऋदन्तानामुशनसादीनाञ्चाऽनङ्(१२०)स्यादसम्बुद्धौ सौ परे।

**अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम्। ६। ४। ११।**

अबादीनामुपधाया दीर्घः स्यादसम्बुद्धौ सर्वनामस्थाने परे (१२१) नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम्। तेन पितृभ्रातृप्रभृतीनां न। उद्गातृशब्दस्य भवत्येव। समर्थसूत्रे उद्गातार इति भाष्यप्रयोगात्। क्रोष्टा। क्रोष्टारौ। क्रोष्टारः। क्रोष्टारम्। क्रोष्टारौ। क्रोष्टून्।

**विभाषा तृतीयादिष्वचि। ७। १। ९७।**

अजादिषु तृतीयादिषु क्रोष्टुर्वा तृज्वत्। क्रोष्ट्रा। क्रोष्ट्रे।

**ऋत उत् (१२२)। ६। १। १११।**

ऋदन्तात् ङसिङसोरतिपरे उकार एकादेशः स्यात्। रपरत्वम्।

**रात्सस्य। (१२३) ८। २। २४।**

---

(१२०) अनङ् सावितिं सूत्रं (११०पृ०) असम्बुद्धौ (११२पृ०) इत्यनयोऽर्थमुद्दार्येति तात्पर्यं आचष्टेऽनङिति।

(१२१) दुर्बोधे दीर्घे इत्यनेन(८०पृ०) दीर्घ इति लोपधाया इत्यनेन:(१६पृ०) उपधाया इति सर्वनामस्थाने चासम्बुद्धाविति(१११पृ०) इत्यस्यानुवर्तते।

(१२२) ऋत उदिति। ङसिङसोश्चेति(११०पृ०) इत्यस्मात्, एकः पूर्वपरयोरित्यतः (६०पृ०) अचीति चानुवर्तते।

(१२३) रादिति। अत्र संयोगान्तलोपेनैव सिद्धे रात्सस्येति नियमार्थं पुनरारम्भणमिति (७७पृ०) निर्देशात् रादेव लोप इति विपरीतनियमेन।

रेफात्संयोगात्तस्य सस्यैव लोपो नान्यस्य। रेफस्य विसर्गः। क्रोष्टुः। आमि परत्वात्तृज्वद्भावे प्राप्ते* नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन (१२४)*। क्रोष्टूनाम्। क्रोष्टरि। क्रोष्टौ। पक्षे हलादौ च शम्भुवत्। इत्युदन्ताः। हूहूः। हूह्वौ। हूह्वः। हूहूम्। हूह्वौ। हूहूनित्यादि। अतिचमूशब्दे तु नदीकार्यं विशेषः। शेषन्तु क्विबन्तवातप्रमीवत्। हे अतिचमु। अतिचम्वै। अतिचम्वाः। अतिचमूनाम्। अतिचम्वाम्। खलपूः।

## ओः सुपि (१२५)। ६।४।८३।

धात्ववयवसंयोगपूर्वो न भवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्याऽनेकाचोऽङ्गस्य यण् स्यादजादौ सुपि। गतिकारकेतर पूर्वपदस्य यण् नेष्यते। खलप्वौ। खलप्व इत्यादि। एवं सुल्वादयः। अनेकाचः किम्। लूः। लुवौ। लुवः। धात्ववयवेति किम्। उन्नूः। उन्नुवौ। उन्नुवः। असंयोगपूर्वस्य किम्। कटप्रवौ। कटप्रुवः। गतीत्यादि किम्। परमलुवौ। सुपि किम्। लुलुवतुः। सुभूः। न भूसुधियोः(१७०पृ)। सुभुवौ। सुभुवः।

---

(१२४) नुमचिरेति। ह्रस्वनद्यापो नुडिति(१४०पृ०)नुट्, अचि र ऋत इति (१२०पृ०) रः, तृज्वत्क्रोष्टुरिति (१२१पृ०) परत्वात् प्राप्ता अपि नुटा बाध्यन्ते पूर्वविप्रतिषेधेन पूर्वमेव नुटा परेषां विप्रतिषेधात् बाधात् तदाभ्यं कृत्वा नुटा भविष्यतीत्यर्थः।

(१२५) ओःसुपीति। एरनेकाच इति (११८पृ०) अनेकेरित्यादि वदं विवाय धातुवर्णस्य संयुक्तेन इत्याद्यर्थेनाह धात्ववयवेत्यादि।

वर्षाभ्वश्च(१२६)। ६। ४। ८४।

अस्योवर्णस्य यण् स्यादचि सुपि। वर्षाभ्वौ। वर्षाभ्वः। दृन्भतीति दृन्भूः (१२७)। अन्दूदृन्भूजम्बूकफेलूकर्कन्धूदिधिषूरित्यादिसूत्रेण(उ०१८८सू०)व्युत्पादितः। दृन्भ्वौ। दृन्भ्वः। दृन्भूम्। दृन्भ्वौ। दृन्भून्। शेषं हलूवत्। दृन्निति नाम हिंसार्थेऽव्यये भुवः क्विप्। दृन्भूः। दृन्करपुनःपूर्वस्य भुवो यण् वक्तव्यः*। दृन्भ्वौ। दृन्भ्व इत्यादि। खलपूवत्। करभ्वौ। करभ्वः। दीर्घपाठे तु कर एव कारः। स्वार्थिकः प्रज्ञाद्यण्। कारभ्वौ। कारभ्वः। पुनर्भूर्योगिकः पुंसि। पुनर्भ्वावित्यादि। दृन्भूकाराभूशब्दौ स्वयंभूवत्। इत्यूदन्ताः। धाता। हे धातः। धातारौ। धातारः। ऋवर्णान्नस्य णत्वं वाच्यम्*। धातॄणामित्यादि। एवं नप्त्रादयः। उद्गातारौ। पिता। व्युत्पत्तिपक्षेऽपि नप्त्रादिग्रहणस्य नियमार्थत्वान्न दीर्घः। पितरौ। पितरः। पितरम्। पितरौ। शेषन्धातृवत्। एवञ्जामातृभ्रात्रादयः। ना। नरौ। नरः। हे नः।

नृ च(१२८)। ६। ४। ६।

नृ इत्येतस्य नामि वा दीर्घः स्यात्। नृणाम्—नॄणाम्। इति

---

(१२६) वर्षाभ्वश्चेति। न भूसुधियोरिति(१००सू०)निषेधे पुनर्विधानार्थं तत्सूत्रस्थं सानुवृत्तिकं वक्तुं यदनुवर्त्त्याह यणित्यादि। चकारोऽनुक्तसमुच्चयार्थः तेन दृन्करपुनःपूर्वस्येति वार्त्तिकोक्तस्तत्पूर्वोऽपि भूशब्दो ग्राह्यः।

(१२७) दृन्भूरिति। वस्तुतो वार्त्तिकमेतत् धातुत्वाभावेन नोवङ्प्रसङ्गः।

(१२८) नृ चेति। न रोति नुपन्त्रीकं नामीति सूत्रं(६४सू०)सानुवृत्तिकं छन्दस्युभयथेत्यतः उभयथेति(६।४।५सू०)चानुवर्त्त्याह नृ इत्यस्य नामीत्यादि।

ऋदन्ताः । कृ तृ अनयोरनुकरणे प्रकृतिवदनुकरणमिति वैकल्पिकाऽतिदेशादित्वे रपरत्वम् । कीः । किरौ । किरः । तीः । तिरौ । तिरः । इत्यादि गीर्वत् । इत्वाभावपक्षे तु ऋदुशन इति (१२१पृ०) ऋतो ङीति (१२१पृ०) च तपरकरणादनङ्गुणौ न । कॄः । क्रौ । क्रः । कॄम् । क्रौ । कॄन् । क्रा । क्रे । इत्यादि । इति ॠदन्ताः । गम्ऌ शक्ऌ अनयोरनुकरणेऽनङ् । गमा । शका । गुणविषये तु लपरत्वं गमलौ । गमलः । गमलम् । गमलौ । गमॄन् । गम्ला । गम्ले । ङसिङसोस्तु । ऋत उदिति (१२२पृ०) उत्वे लपरत्वे संयोगान्तस्य (२६पृ०) लोपः । गमुल् । शकुल् । इत्यादि । इति ऌदन्ताः । सेः । सयौ । सयः । स्मृतेः । स्मृतयौ । स्मृतयः । इत्येदन्ताः ।

## गोतो णित् ।७।१।९०।

गोशब्दात्परं सर्वनामस्थानं (१२८) णिद्वत्स्यात् । गौः । गावौ । गावः ।

## औतोऽम्शसोः ।६।१।९३।

आ ओत इति छेदः । ओकारादम्शसोरचि परे आकार एकादेशः स्यात् । शसा साहचर्यात् सुबेव अम् गृह्यते नेह ।

---

(१२८) स्वादिष्वसर्वनामस्थाने इत्यतः (१६१पृ०) सर्वनामस्थाने इत्यनुवर्त्य विभक्तिं विपरिणमय्य सर्वनामस्थानमिति ।

अचिनवम्(१२०) । असुनवम् । गाम् । गावौ । गाः । गवा । गवे । गोः । इत्यादि । ओतो णिदिति वाच्यम्* । विहित विशेषणञ्च* । तेन । सुद्योः । सुद्यावौ । ओकारान्ताद्विहितं सर्वनामस्थानमिति व्याख्यानादेव । हे भानो ! भानवः । द्युः अभ्रुः स्मृतो येन सः स्मृतोः । स्मृतावौ स्मृतावः । स्मृताम् । स्मृतावौ । स्मृताः । इत्यादि । इत्योदन्ताः ।

## रायो हलि (१२१) ।७।२।८५।

रैशब्दस्याऽऽकारोऽन्तादेशः स्याद्धलि विभक्तौ । राः । अचि (पृ०)आयादेशः । रायौ । रायः । रायम् । रायौ । रायः । राया । राभ्यामित्यादि । इत्यैदन्ताः । ग्लौः । ग्लावौ । ग्लावः । ग्लावम् । ग्लावौ । ग्लावः । इत्यादि । ओतोऽम्-शसोरिति (१२५४०) इह न प्रवर्त्तते । ऐऔ (१४०) च सूत्रेण ओदौतोः सावर्ण्याभावज्ञापनात् ।

इत्यजन्ताः पुंलिङ्गाः ।

---

(१२०) अचिनवमिति चिनोतेः गोर्णुचे ओकारान्तस्य नामकस्य स्वोऽमो ऽपि परे मा भूदिति ।

(१२१) रायो हलीति । अत्र वा विभक्तावित्यनु: (१६१४०) विभक्तावित्यनुवर्त्तते इति विभक्तावित्यत्र । ओकाराद्यभावे: ।

रमा ।

औङ आपः । ७ । १ । १८ ।

आबन्तादङ्गात्परस्यौङः शी (१) स्यात् । औङित्यौकार-विभक्तेः संज्ञा प्राचाम् । रमे । रमाः ।

सम्बुद्धौ च । ७ । ३ । १०६ ।

आप एकारः (२) स्यात्सम्बुद्धौ । एङ्ह्रस्वादिति (८८पृ०) सम्बुद्धिलोपः । हे रमे । हे रमे । हे रमाः । रमाम् । रमे । रमाः । स्त्रीत्वान्नत्वाभावः ।

आङि चापः (३) । ७ । ३ । १०५ ।

आङि ओसि च परे आबन्तस्याऽङ्गस्य एकारः स्यात् । रमया । रमाभ्याम् । रमाभिः ।

याडापः । ७ । ३ । ११३ ।

आपः परस्य ङिद्वचनस्य (४) याडागमः स्यात् । वृद्धिरेचि (४३पृ०) । रमायै । सवर्णदीर्घः । रमायाः २ । रमयोः रमा-णाम् । रमायाम् । रमयोः । रमासु । एवं दुर्गादयः ।

---

(१) औङ आप इति । अतः शीत्वतः (८४पृ०)शीतिपदमनुवर्त्याह शीति ।

(२) बहुवचने झल्येदित्यतः (८२पृ०) एदिति आङि चाप इत्यतः, आप इति चानुवर्त्याह आप एकार इति ।

(३) आङि चाप इति चकारेण ओसि चेत्यतः ओसीति (८४पृ०) बहुवचने झल्येदित्यतः, (८२पृ०) एदिति चानुवर्त्याह ओसि चेत्यादि ।

(४) घेर्ङितीत्यतो (१०८पृ०) ङितीत्यनुवर्त्य 'विभक्ति' विपरिणमय्याह ङिद्वचनस्येति ।

### सर्वनाम्नः स्याड्ढ्रस्वश्च। ७। ३। ११४।

ाबन्तात् सर्वनाम्नः परस्य ङितः स्याट्(५) स्यादापश्च ह्रस्वः। ाटोऽपवादः। सर्वस्यै। सर्वस्याः २। एकादेशस्य(६)पूर्वान्त-न ग्रहणात् आमि सर्वनाम्न इति (८७पृ०)सुट्। सर्वासाम्। र्वस्याम्। सर्वयोः। सर्वासु। एवं विश्वादय आबन्ताः।

### विभाषा(७)दिक्समासे बहुव्रीहौ।१।१।२८

त्र सर्वनामता वा स्यात्। उत्तरपूर्वस्यै उत्तरपूर्वायै। दिङ्ना-ान्यन्तराले इति (४११पृ०)(८)प्रतिपदोक्तस्य दिक्समासस्य हणान्नेह। योत्तरा सा पूर्वा यस्या उन्मुग्धायास्तस्यै उत्तर-ायै इत्यर्थः। अपुरीत्युक्तिः (८८पृ०)नेह अन्तरायै नगर्यै।

### विभाषा द्वितीयातृतीयाभ्याम्।७।३।११५।

---

) याडाप इत्यत्र आप तस्य तत्सूत्रे लुङ्गत्डित्त्वानुकर्षणादाह आबन्ता-दिति ङित इति च।

) आबन्तस्य गणे पाठाभावात् कथं सर्वनामत्वमित्याशङ्क्याह एका-देशस्येति टापा सहादन्तसर्वनाम्नैकादेशस्येत्यर्थः। ग्रहणात् सर्व-नामशब्देन ग्रहणात्। लिङ्गविशिष्टपरिभाषया सर्वनामत्वमित्येव तु न्यायः।

) विभाषेति। सर्वादीनि सर्वनामानीत्यतः (८६पृ०) सर्वनामानीत्यनुवर्त्त-योग्यतया योजयन्नाह सर्वनामतेति।

) दिक्समास इति दिक्शब्दस्यार्थे विहितः समासो दिक्समासो न त्वन्यार्थ इति दर्शयितुमाह दिङ्नामान्यन्तराले इति।

आभ्यां ङितः (९) स्याडापश्च ह्रस्वः। इदं सूत्रं त्यक्तुं शक्यम् तीयस्य ङित्सूपसंख्यानात् (१०२पृ०)। द्वितीयस्यै द्वितीयायै द्वितीयस्याः २ द्वितीयायाः २। द्वितीयस्यां—द्वितीयायाम्। शेषं रमावत्। एवन्तृतीया। अम्बार्थनद्योर्ह्रस्वः (११७पृ०)। हे अम्ब। हे अक्क। हे अल्ल। असंयुक्ता (१०) ये डलकास्तद्वतां न ह्रस्वः। हे अम्बाले। हे अम्बाडे। हे अम्बिके। जरा। जरसौ। शीभावात्परत्वाज्जरस्। आमि नुटः परत्वाज्जरम्। जरसामित्यादि। पक्षे हलादौ च रमावत्। इह पूर्वप्रतिषेधेन शीभावं कृत्वा सन्निपातपरिभाषाया अनित्यतामाश्रित्य जरसी इति केचिदाहुस्तन्निर्मूलम्। यद्यपि जरसादेशस्य स्थानिवद्भावेनाबन्ततामाश्रित्य औङ आपः (१२७पृ०) आङि चापः (१२७पृ०) याडापः (१२७) ह्रस्वनद्यापः (९४पृ०) ङेराम् इति (११७पृ०) च पञ्चाऽपि विधयः प्राप्ताः एवं नसन्निग्रहम्, तथाऽप्यनल्विधाविति (२२पृ०) न भवन्त्या आबिति प्रश्लिष्य आकाररूपस्यैवापः सर्वत्र ग्रहणात्। एवं हलङ्यादि (१११पृ०) सूत्रेऽपि आ आप् ङी ई इति प्रश्लेषादतिखट्वः निष्कौशाम्बिरित्यादिसिद्धेर्दीर्घग्रहणं (११) प्रत्याख्येयम्। न चैवमप्यतिखट्व इत्यत्र स्थान्ययमाकारत्वं

---

(९) घेर्ङितीत्यतो (१०९पृ०) ङितीत्यनुवर्त्य षष्ठ्या विपरिणामश्च च याडाप इत्यतः (१२७पृ०) आप इति, सर्वनाम्नः स्याड् ह्रस्वश्चेत्यतः (१२८पृ०) स्याडिति ह्रस्व इति चानुवर्त्याह ङित इत्यादि।

(१०) अम्बार्थे ह्रस्वं वदतीति भाष्योक्तेर्डलकवत्स्वाम्बार्थस्य ग्रहणं नान्येषामित्याशयेन फलितमाह असंयुक्ता इति।

(११ दीर्घग्रहणं ङ्याप्स्थानिकोदीर्घभिन्न आदेशो 'न स्थानिवदित्यर्थे' ङ्याप्ग्रहणेऽदीर्घ इति १।१।५८ सूत्रस्थे। वार्त्तिके इति बोध्यम्।

स्थानिवद्भावेनापत्वस्याश्रित्य याट् स्यादिति वाच्यम्। आबन्तं यदङ्गं ततःपरस्य याड्विधानात् उपसर्जनस्त्रीप्रत्यये (१२) तदादिनियमात्। पद्दिति(१०४पृ०) नासिकाया नस्। नसः। नसा। नोभ्यामित्यादि। पक्षे सुटि च रमावत्। निशायाः निश्। निशः। निशा।

### व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः।८।२।३६।

व्रश्चादीनां सप्तानां छशान्तयोश्च षकारोऽन्तादेशः स्याज्झलि पदान्ते (१३) च। षस्य जश्त्वेन डकारः। निड्भ्याम्। निड्भिः। सुपि डःसीति(६४पृ०)पक्षे धुट् चर्त्वम् चर्त्वस्याऽसिद्धत्वात् (६४पृ०)च यो द्वितीया इति(६४पृ०)टतयोष्ठथौ (१४) न, न पदान्ताट्टोरिति (५८पृ०) न ष्टुत्वम्। निट्त्सु। निट्सु।

---

(१२) उपसर्जनेति। अङ्गसंज्ञायां यस्मात् प्रत्ययविधिस्तदादि तदन्तस्य ग्रहणमिति नियमेऽपि स्त्रीप्रत्यये तदादिविधिनियमाभावादतिखट्वस्यावन्तत्वेन याट्प्रसङ्ग इत्याशङ्क्य उपसर्जनेत्यादिकमुक्तं तथा च स्त्रीप्रत्यये चानुपसर्जने न इति अनुपसर्जने स्त्रीप्रत्यय एव तदादिनियमप्रतिषेधो न तूपसर्जनेऽपीत्यर्थो वार्त्तिकस्येति भावः।

(१३) पदेति झलो झलीत्यतो (७४०पृ०) झलीति स्कोःसंयोगाद्योरन्ते चेत्यतः (१६२पृ०) अन्त इति चानुवर्त्य योग्यत्वात्पदस्येत्यन्त इत्याह झलीत्यादि। अत्र राजपदग्रहणेनैव भ्राजशब्देऽपि भ्राजपदग्रहणसंभवे पृथग्ग्रहणं नार्थवद्ग्रहणे परिभाषाज्ञापनाय। तथाच भ्राजघटकराजभागस्यानर्थ-कत्वात् राजपदग्रहणेन तद्ग्रहणाभावः सार्थकराजशब्दस्यैव ग्रहणादिति बोध्यम्

(१४) टतयोष्ठथाविति धुडभावपक्षे टकारस्य ठकारः धुट्पक्षे तु तकारस्य थकार इति विवेकः।

## षढोः कः सि। ८।२।४१।

षस्य ढस्य च कः स्यात्सकारे परे। इति तु न भवति (१५) जश्त्वं प्रत्यसिद्धत्वात्। केचित्तु (१६) व्रश्चादिसूत्रे दादेर्धातोरिति (१४६पृ०) सूत्राद्धातोरित्यनुवर्त्तयन्ति। तन्मते जश्त्वेन जकारे। निज्भ्याम्। निज्भिः। जश्त्वं सत्वं चर्त्वम्। निच्षु। चोःकुरिति (१६५पृ०) कुत्वम् न भवति जश्त्वस्यासिद्धत्वात्। मांसपृतनासानूनां मांस्पृत्स्नवो वाच्याः *। शसादौ वा। पृतः। पृता। पृद्भ्याम। पक्षे सुटि च रमावत्। गोपा विश्वपावत्। मतिः प्रायेण हरिवत्। स्त्रीत्वान्नत्वाभावः। मतीः। नात्वम। मत्या।

## ङिति (१७) ह्रस्वश्च। १।४।६।

इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ, ह्रस्वौ च इवर्णोवर्णौ स्त्रियां वा नदीसंज्ञौ स्तो ङिति परे। आण्नद्याः(११७पृ०)। मत्यै-मतये। मत्याः मतेः २। नदीत्वपक्षे औदिति ङेरौत्वे प्राप्ते।

---

(१५) न भवतीति जश्त्वात् प्राक् षकारस्य स्थाने ढत्वम्: कृते तु जशि प्राप्तिरेव नास्ति असिद्धत्वात् (२२पृ०) इत्युक्तेरिति भावः।

(१६) केचित्त्विति। दादेर्धातोरिति(१४६पृ०)धातुपदस्य एकाचो बशोभष्झषन्तस्य (१४६पृ०) अनुवर्त्तनीयतया मध्ये विच्छेदोऽनुचित इति भावः।

(१७) ङितीति अत्र वाक्यद्वयमाद्ये यू स्त्र्याख्याविति (११६पृ०) अस्तीति, इयङुवङ्स्थानाविति, नेति च (११५पृ०) तत्तत्सूत्रादनुवर्त्तते अन्ये तु यू इति, स्त्र्याख्याविति, वेति चानुवर्त्तते इत्यादियोगात् इयङित्यादि।

## इदुद्भ्याम् (१८)। ७। ३। ११७।

नदीसंज्ञकाभ्यामिदुद्भ्यां परस्य ङेराम् स्यात्। पक्षे अच्च घेः(११०पृ०)। मत्याम् मतौ। एवं श्रुतिस्मृतिबुद्ध्यादयः।

## त्रिचतुरोःस्त्रियान्तिसृचतसृ।७।२।९९।

स्त्रीलिङ्गयोरेतयोरेतावादेशौ स्तो (१९) विभक्तौ परतः।

## अचि र ऋतः। ७। २। १००।

तिसृचतसृ एतयोर्ऋकारस्य रेफादेशः स्यादचि। गुणदीर्घोत्वानामपवादः। तिस्रः २। तिसृभिः। तिसृभ्यः २। आमि नुमचिरेति (१२३पृ०) नुट्।

## न तिसृचतसृ (२०)। ६। ४। ४।

एतयोर्नामि दीर्घो न स्यात्। तिसृणाम्। तिसृषु। स्त्रियामिति त्रिचतुरोर्विशेषणान्नेह प्रियास्त्रयस्त्रीणि वा यस्याः सा प्रियत्रिः। इत्यादि मतिवत्। आमि प्रियत्रयाणामिति

---

(१८) इदुद्भ्यामौदच्च घेरित्येकमेव सूत्रं योगविभागेन त्रिधा विभज्य सूत्रत्रयं कल्पितम् तेन ङेरामित्यतो (११७पृ०) नदीति, ङेरिति, आमिति च, पदत्रयमनुवर्त्त्याह नदीसंज्ञकाभ्यामित्यादि।

(१९) त्रिचतुरोरित्यत्र अष्टन आ विभक्तावित्यतो(१६२पृ०)विभक्तावित्यनुवर्त्तते स्त्रियामित्यस्य विवरणं स्त्रीलिङ्गयोरिति स्त्रीनिष्ठसंख्याबोधकयोरित्यर्थः तेन त्रिचतुःशब्दयोः पुंनपुंसकत्वेऽपि समुदायस्य स्त्रीबोधकत्वेनाऽङ्गतया नादेश आदेशावयवस्य स्त्रीत्वबोधकत्वे इति बोध्यम्।

(२०) तिसृचतसृ इति लुप्तषष्ठी द्विवचनं पदं नामीति (८४पृ०) सामुदायिकमनुवर्त्तते तदाह नामि दीर्घ इति।

विशेषः। प्रियास्तिस्रो यस्येति विग्रहे तु प्रियतिसा। प्रियतिस्रौ। प्रियतिस्रः। प्रियतिस्रमित्यादि। प्रियास्तिस्रो यस्य तत्कुलम्। प्रियत्रि। स्वमोर्लुका लुप्तत्वेन(११४सू०)प्रत्ययलक्षणाभावान्न तिस्रादेशः। न लुमतेति(११४सू०)निषेधस्याऽनित्यत्वपक्षे प्रियतिसृ। रादेशात्पूर्वविप्रतिषेधेन नुम्। प्रियतिसृणी। प्रियतिसृणि। तृतीयादिषु (१४२सू०) वक्ष्यमाणपुंवद्भावविकल्पात्पर्य्यायेण नुमरभावौ। प्रियतिस्रा प्रियतिसृणा इत्यादि। द्वेरत्वे सत्याप्। द्वे २। द्वाभ्याम् ३। द्वयोः २। गौरी। गौर्य्यौ: गौर्य्यः। नदीकार्य्यम् हे गौरि। गौर्य्यै। इत्यादि। एवं वाणीनद्यादयः। प्रातिपदिकग्रहणे लिङ्गविशिष्टस्याऽपि ग्रहणादनङि(११०सू०) णिद्वद्भावे(१११सू०)च प्राप्ते। विभक्तौ (२१) लिङ्गविशिष्टाग्रहणम्। सखी। सख्यौ। सख्यः इत्यादि गौरीवत्। अङ्यन्तत्वान्न‡सुलोपः। लक्ष्मीः। शेषं गौरीवत्। एवन्तरीतन्त्र्यादयः। स्त्री हे स्त्रि।

**स्त्रियाः। ६। ४। ७९।**

स्त्रीशब्दस्य इयङ्(२२)स्यादजादौ प्रत्यये परे। स्त्रियौ। स्त्रियः।

**वाम्शसोः। ६। ४। ८०।**

अमि शसि च स्त्रिया इयङ् वा स्यात्-स्त्रियम्। स्त्रीम्।

---

(२१) विभक्तिनिमित्तके कार्य्ये लिङ्गविशिष्टपरिभाषाया अप्रवृत्तिम् एतच्च सुवोरनाकाविति सूत्रभाष्ये पठितमिति बोध्यम्।

‡लक्षेर्मुट् चेति (उ४१२सू०) ईप्रत्ययान्तत्वात् न ङ्यन्तता।

(२२) अचि श्नुधात्वित्यादिसूत्रात् (११८सू०) इयङ्ङेवानुवर्त्तते स्त्रीग्रहणं सम्बन्धाभावादचीत्यनुवर्त्तते एवेत्याहुर्वदन्ति।

स्त्रियौ । स्त्रियः—स्त्रीः । स्त्रिया । स्त्रियै । स्त्रियाः २ । स्त्रियोः परत्वान्नुट् । स्त्रीणाम् । स्त्रियाम् । स्त्रियोः । स्त्रीषु । स्त्रियमतिक्रान्तः । अतिस्त्रिः अतिस्त्रियौ ।

गुणनाभावौत्वनुड्भिः परत्वात् पुंसि बाध्यते ।
क्लीबे नुमा च स्त्रीशब्दस्येयङित्यवधार्य्यताम् ॥ १ (२३)

जसि च(१०८पृ०) । अतिस्त्रयः हे अतिस्त्रे । अतिस्त्रियौ । अतिस्त्रयः । वामशसोः(११२पृ०) । अतिस्त्रिम्—अतिस्त्रियम् । अतिस्त्रियौ । अतिस्त्रियः—अतिस्त्रीन् । अतिस्त्रिणा । घेर्ङिति (१०९पृ०) । अतिस्त्रये । अतिस्त्रेः २ । अतिस्त्रियोः २ । अतिस्त्रीणाम् । अच्च घेः (११०पृ०) । अतिस्त्रौ ।

(२४) ओत्वौकारे च नित्यं स्यादम्शसोस्तु विभाषया ।
इयादेशोऽचि नाऽन्यत्र स्त्रियाः पुंस्युपसर्जने ॥ २

अतिस्त्रि । क्लीबे तु नुम् । अतिस्त्रिणी । अतिस्त्रीणि । अतिस्त्रिणा । अतिस्त्रिणे । ङे प्रभृतावजादौ वक्ष्यमाणपुंवद्भावात् (१४२पृ०) पक्षे प्राग्वद्रूपम् । अतिस्त्रये अतिस्त्रिणे अतिस्त्रेः २ अतिस्त्रिणः २ । अतिस्त्रिणोः अतिस्त्रियोरित्यादि ।

---

(२३) गुणमेत्यादि । जसि चेति(१०८पृ०)घेर्ङितीति च(१०९पृ०)गुणः आङो नेति(१०९पृ०) नाभावः अच्च घेरित्यौत्वं (११०पृ०) ह्रस्वनद्यापोनुडिति (९४पृ०)नुट् चैतैः कार्य्यैः परत्वान्नित्यत्वात् स्त्रीशब्दस्य इयादेशो बाध्यते इत्यन्वयः । इकोऽचीति(१४२पृ०)नुमा परत्वात् स एव बाध्यते इत्यर्थः।

(२४) पूर्वकारिकोक्तबाधविषयं परित्यज्येयादेशविषयमाह ओत्वाविति अजादौ च इयादेशो विहितः स उपसर्जने उपसर्जनतया पुंसि विद्यमानस्य स्त्रीशब्दस्य ओत्वादिषु परत्वेऽपि च भवति नान्यत्र गुणादिभिन्नेषु इयङो बाधकादिति भावः ।

स्त्री। श्रीणाम्-श्रियाम्। श्रियि-श्रियाम्। प्रधीशब्दस्य तु(२७) वृत्तिकारादीनां मते लक्ष्मीवद्रूपम् पदान्तरं विनापि स्त्रियां वर्त्तमानत्वं नित्यस्त्रीत्वमिति स्त्रीकारात् लिङ्गान्तरानभिधायकत्वन्तदिति कैयटमते पुंवद्रूपम् (२८)। प्रकृष्टा धीरिति विग्रहे तु (२९) लक्ष्मीवत्। अमि शसि च। प्रध्यम्। प्रध्यः इति विशेषः। सुष्ठु धीर्यस्याः सुष्ठु ध्यायति वेति विग्रहे वृत्तिकारमते सुधीः श्रीवत् (३०) मतान्तरे

---

२७) प्रधीशब्दस्येति प्रकृष्टं ध्यायतीत्यर्थकस्येत्यर्थः तत्र च कैयटोक्तनित्यस्त्रीत्वाभावेन नदीत्वाप्राप्त्या भाष्यासङ्गतिरतः स्त्रीविषयावेव यौ यू नित्यमिति भाष्ये एवकारो भिन्नक्रमे नित्यमेव यौ यू स्त्रीविषयावित्यर्थः नित्यमित्यस्य तु पदान्तरं विनापीत्यर्थः खलपूकटप्रूग्रामणीप्रभृतिशब्दानां क्रियाशब्दतया पुंसि मुख्या वृत्तिः पुंसां शक्तत्वाद्व्यवहितत्वाच्च तद्धर्मत्वौचित्यात् अतस्तेषां पदान्तरं विना न स्त्रीबोधकत्वं ध्यानादिकं तु स्त्रीपुंससाधारणमिति पदान्तरं विनाऽपि तथात्वमिति विवेकः।

२८) पुंवद्रूपमिति उक्तविग्रहे स्त्रीनित्यस्त्रीत्वाभावात् पुंसीव स्त्रियामपि नदीत्वाभावादिति भावः।

२९) प्रकृष्टा धीरिति विग्रहे इति एतत्पदघटितविग्रहे इत्यर्थकत्वेन प्रकृष्टा धीर्यस्या इति बहुव्रीहेरपि संग्रहः तस्यापि तत्पदघटितत्वात् उभयसमासपक्षे मतद्वयेऽपि स्त्रीलिङ्गत्वे लक्ष्मीवदिति प्रथमलिङ्गग्रहणस्य (१।४।४०) इत्यवयवस्य नदीत्वात् नेयङ्वुङिति निषेधस्य भाष्योक्तरीत्याप्राप्तेरिति भावः।

३०) श्रीवदिति स्त्रियामिति शेषः। विशिष्टस्येयङुवङ्स्थानत्वेन ङिदादौ विकल्पस्याप्यत्र निषेधस्य च प्राप्तेः। पुंसि तादृशबहुव्रीहौ न नदीत्वं नेयङुवङ्स्थानाविति निषेधस्य वस्तुतस्तु चाप्राप्तेरिति भावः।

पुंवत् (३१)। सुष्ठु धीरिति विग्रहे तु (३२) श्रीवदेव। ग्रामणीः पुंवत् ग्रामनयनस्योत्सर्गतः पुन्धर्मतया पदान्तरं विनापि स्त्रियामप्रवृत्तेः। एवं खलप्वादेरपि पुन्धर्मत्वमौत्सर्गिकम्बोध्यम्। यवक्रीतिवत्।

## स्त्रियाञ्च (३३)। ७।१।९६।

स्त्रीवाचो क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते।

## ऋन्नेभ्यो ङीप्। ४।१।५।

ऋदन्तेभ्यो नान्तेभ्यश्च स्त्रियां ङीप् स्यात्। क्रोष्ट्री। क्रोष्ट्र्यौ। क्रोष्ट्र्यः। वधूर्गौरीवत्। भ्रूः श्रीवत्। हे सुभ्रूः। कथन्तर्हि (३४) हा पितः क्वासि हे सुभ्रु इति भट्टिः। प्रमाद (३५) एवायमिति बवहः। खलपूः पुंवत्। पुनर्भूः। दृन्-

---

(३१) मतान्तरे पुंवदिति सुष्ठु ध्यायतीति विग्रहे इति शेषः कैयटमते तस्य लिङ्गान्तराभिधायितया नित्यस्त्रीत्वाभावात् पुंसीव स्त्रियामपि नदीत्वं नास्तीति भावः।

(३२) सुष्ठु धीरिति विग्रह इति ईदृशपदघटितविग्रहे इत्यर्थस्तेन पूर्ववत् बहुव्रीहेरपि संग्रहस्तथा च बहुव्रीहाववयवस्य, कर्मधारये समुदायस्य, नेयङुवङिति निषेधस्य ङिन्दाम्नोर्विकल्पस्य च प्राप्तिरिति भावः।

(३३) अत्र तृज्वत् क्रोष्टुरिति (१२१४०) सूत्रमेवानुवर्त्तते न तु सर्वनामस्थान इत्यपि तथात्वे सूत्रवैयर्थ्यापत्तेः।

(३४) कथमिति नेयङुवङिति नेनावयवस्य समुदायस्य च नदीत्वनिषेधात् प्रश्नः।

(३५) प्रमाद इति विरहपीडितस्य रामस्यैवानवधानवचनः प्रमादो न तु कवेः स च काव्ये विरहमोचकतया सुष्ठ्वैव कविना तथा निबद्ध इति विभावनीयम्।

करेति(१२४पृ०)यण् । उवङो बाधनान्नेयङुवङिति निषेधो न । हे पुनर्भु । पुनर्भ्वम् । पुनर्भ्वौ । पुनर्भ्वः ।

**एकाजुत्तरपदे णः । ८ । ४ । १२ ।**

एकाजुत्तरपदं यस्य तस्मिन् समासे पूर्वपदस्थान्निमित्तात्परस्य प्रातिपदिकान्तनुम्विभक्तिस्थस्य(२६)नस्य नित्यं णत्वम् स्यात् । आरम्भसामर्थ्यान्नित्यणत्वे सिद्धे पुनर्णग्रहणं स्पष्टार्थम् । यणं बाधित्वा परत्वान्नुट् । पुनर्भूणाम् । वर्षाभूः । भेकजातौ नित्यस्त्रीत्वाऽभावात् । हे वर्षाभूः । कैयटमते । मतान्तरे तु हे वर्षाभु । पुनर्नवायान्तु हे वर्षाभु । भेक्याम्पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमानिति यादवः । वर्षाभ्वश्च (१२४पृ०) । वर्षाभ्वौ । वर्षाभ्वः । स्वयम्भूः पुंवत् ।

**न षट्स्वस्रादिभ्यः । ४ । १ । १० ।**

षट्संज्ञकेभ्यः स्वस्रादिभ्यश्च ङीप्टापौ न स्तः ।

स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा ।

याता मातेति (२७) सप्तैते स्वस्रादय उदाहृताः ॥ १ ॥

अप्तृन्निति (१२२पृ०) दीर्घः । स्वसा । स्वसारौ । स्वसारः । माता पितृवत् । शसि । मातॄः । द्यौर्गोवत् । राः पुंवत् । नौर्ग्लौवत् । इत्यजन्ताः स्त्रीलिङ्गाः ।

---

(२६) प्रातिपदिकान्तनुम्विभक्तिषु चेत्यनेन: (४८२पृ०) प्रातिपदिकान्तादेरनुवर्त्तनेन विभक्तिविपरिणामेन चाह प्रातिपदिकान्तेत्यादि ।

(२७) स्वस्रादिगणे मातृशब्दो ननान्द्रादिसाहचर्यात् सम्बन्धिवाचकपरतया जननीवाचको ग्राह्यः न तु परिच्छेत्तृवाचकः ।

## अतोऽ(१)म्। ७। १। २४।

अतोऽङ्गात् क्लीबात्स्वमोरम् स्यात्। अमि पूर्वः (६०पृ०)। ज्ञानम्। एङ्ह्रस्वादिति (८९पृ०)हल्ग्रहणाल्लोपः। हे ज्ञान।

## नपुंसकाच्च। ७। १। १९।

क्लीबात्परस्यौङः शी (२) स्यात्। भसंज्ञायाम्।

## यस्येति (३) च। ६। ४। १४८।

भस्येवर्णावर्णयोर्लोपः स्यादीकारे तद्धिते च परे। इत्यकारलोपे प्राप्ते। औङः श्याम्प्रतिषेधो वाच्यः *। ज्ञाने।

## जश्शसोः शि। ७। १। २०।

क्लीबादनयोः शि स्यात्।

## शि सर्व्वनामस्थानम्। १। १। ४२।

शि इत्येतदुक्तसंज्ञं स्यात्।

## नपुंसकस्य झलचः। ७। १। ७२।

---

(१) अत इति अविकृतस्याङ्गस्य विशेषणं स्वमोर्नपुंसकादिति(१४२पृ०)वानुवर्त्तते अयञ्चाम् लुको, बाधको येन नाप्राप्ते इति न्यायात्।

(२) जसः शीति(९१पृ०)सूत्रात् शीति औङ आप इत्यत्र (१२७पृ०) औङिति चानुवर्त्त्याह औङः शीति।

(३) यस्येतीति इश्च अश्च यं तस्य ईत् ईकारे तस्मिन् भस्येत्यधिकारः (६।४।१२९पृ०) तेन भसंज्ञितः इत्यनः (२२४पृ०) गहितोऽनुवर्त्यते इत्याह भस्येत्यादि।

झलन्तस्याऽजन्तस्य च क्लीबस्य नुमागमः(४)स्यात्सर्वनामस्थाने परे। उपधादीर्घः (११०पृ०)ज्ञानानि। पुनस्तद्वत्। शेषं रामवत्। एवन्धनवनफलादयः।

**अद्ड्डतरादिभ्यः पञ्चभ्यः ।७।१।२५।**

एभ्यः क्लीबेभ्यः स्वमोरद्ड् डादेशः (५) स्यात्।

**टेः (६)।६।४।१४३।**

डिति परेभस्य टेर्लोपः स्यात्। वावसाने(१२४०)। कतरत् कतरद्। कतरे। कतराणि भस्येति किम्। पञ्चमः(७)। टेर्लुप्तत्वात्(८)प्रथमयोरिति(७७पृ०) पूर्वसवर्णदीर्घः, एङ्ह्रस्वादिति (८८पृ०)। सम्बुद्धिलोपश्च न भवति। हे कतरत्। पुनस्तद्वत्। शेषम्पूर्ववत्। कतमत्। इतरत्। अन्यत्। अन्यतरत्। अन्यतमशब्दस्य तु अन्यतममित्येव। एकतरात्प्रतिषेधो वक्तव्यः*। एकतरम्। सोरमादेशे कृते सन्निपातपरिभाषया न जरस्।

---

(४) इदितोनुमित्यतो (७२२पृ०) नुमिति उगिदचां सर्वनामस्थाने इत्यतः (१५९पृ०) सर्वनामस्थान इति चानुवर्त्त्य नुमागम इत्यादि।

(५) अद्ड् इति सूत्रे स्वमोर्नपुंसकादिति (१४२पृ०) अनुवर्त्ततेऽत्र दकारस्य टुत्वं संयोगान्तलोपश्च सरूपभेदभिया न कृतम्।

(६) टेरिति अल्लोपोऽन इत्यतो (१०५पृ०) लोप इति ति विंशतेर्डितीत्यतो (४१०पृ०) डितीति चानुवर्त्तते भस्य इत्यधिकारः ६।४।१२९।

(७) पञ्चम इत्यत्र डटि तुडागमे यजादित्वाभावेन भत्वाभावान्न टिलोपः किन्तु पदत्वान्नलोप एवेति भावः।

(८) अद्ड्डो डित्करणफलमाह टेरिति डादेशणाले कृते पूर्वसवर्णदीर्घाभावेन एङ्ह्रस्वादिति (१०९पृ०) सम्बुद्धिलोपः स्यादिति भावः।

अजरम् । अजरसी । अजरे । परत्वाज्जरसि कृते झलन्त-त्वान्नुम् ।

सान्त (९) महतः संयोगस्य । ६ । ४ । १० ।

सान्तसंयोगस्य महतश्च यो नकारस्तस्योपधाया दीर्घः स्यादसम्बुद्धौ सर्वनामस्थाने परे । अजरांसि अजराणि । अमि लुको-ऽपवादममभावम्बाधित्वा परत्वा ज्जरस् । परत्वाज्जरस् । ततः सन्निपातपरिभाषया न लुक्* । अजरसम् । अजरम् । अज-रसी । अजरे । अजरांसि, अजराणि । शेषम्पुंवत् । पद्दन्निति (१०५पृ०) हृदयोदकास्यमांसानां हृद् उदन् आसन् मांस् । हृन्दि । हृदा । हृद्भ्यामित्यादि । उदानि । उद्ना । उदभ्यामित्यादि । आसानि । आस्ना । आसभ्यामित्यादि । मांसि । मांसा । मांभ्या-मित्यादि । वस्तुतस्तु प्रभृतिग्रहणं प्रकारार्थ मित्युक्तम्(१०७पृ०) अतएव भाष्ये मांसचन्त्या(१०)उखाया इत्युदाहृतम् अय-स्मयादित्वेन(१।४।२०पृ०)भत्वात्संयोगान्तलोपो न । पद्दन्नित्यत्र हि छन्दसीत्यनुवर्त्तितं वृत्तौ । तथापि अपो भीत्यत्र(१८२पृ०)

(९) सान्तेति लुप्तषष्ठीकं पृथक् पदं संयोगविशेषणम् नोपधाया इति(१९२पृ०) सर्वनामस्थाने चासम्बुद्धाविति (११०पृ०) चानुवर्त्तते उपधाग्रहणञ्चेदं पूर्वमात्रोपलक्षणं न तु पारिभाषिकं तस्यासम्भवादनएवाम्भांसि श्रेयांसीत्यादिसिद्धिः ।

* जरसोऽदन्तत्वाभावात् स्वमोरिति (१४२पृ०) नामोलुक् ।

(१०) पच्यतेऽस्मिन्नित्याधारे ल्युटि पचनी मांसस्य पचनीति विग्रहे समासे ङ्यो लुका लुप्तत्वात् प्रत्ययलक्षणं नेति बोध्यम् । पद्दिन्नादिसूत्रे (१०५पृ०) प्रभृतिग्रहणस्य प्रकारार्थतया मांसग्रहणस्य मांसादेश इति भावः ।

मासश्छन्दसीति वार्त्तिके (११) छन्दोग्रहणसामर्थ्याल्लोकेऽपि क्वचिदिति कैयटोक्तरीत्या प्रयोगमनुसृत्य पदादयः प्रयोक्तव्या इति बोध्यम्।

## ह्रस्वो नपुंसके प्रातिपदिकस्य। १। २।४७।

क्लीबे प्रातिपदिकस्याऽजन्तस्य ह्रस्वः (१२) स्यात्। श्रीपं ज्ञानवत्। श्रीपाय। अत्र सन्निपातपरिभाषया (१३) आतो धातोरिति (१०८सू०) आकारलोपो न।

## स्वमोर्नपुंसकात् (१४)। ७। १। २३।

क्लीबादङ्गात्परयोः स्वमोर्लुक् स्यात्। वारि।

## इकोऽचि (१५) विभक्तौ। ७। १। ७३।

इगन्तस्य क्लीबस्य नुमागमः स्यादचि विभक्तौ। वारिणी। वारीणि। न लुमतेति(११४सू०)निषेधस्यानित्यत्वात्पक्षे सम्बुद्धिनिमित्तो गुणः। हे वारि हे वारे। आङो ना(१०९सू०)। वारिणा।

---

(११) मासश्छन्दसीति (७। ४। ४८ सू०) मासस्तकारः स्यात् भादौ प्रत्यये छन्दसीत्यर्थः यथा माद्भिः शरद्भिर्दुरोदरमित्यादि।

(१२) ह्रस्व इति। ह्रस्वपदेन ह्रस्वविधानादचश्चेति (२५) परिभाषया उपस्थितस्य तस्य च प्रातिपदिकविशेषणत्वात्तदन्तविधेश्चाजन्तस्येति लाभः।

(१३) सन्निपातेति अवर्णनिमित्तो यादेशः कथमवर्णलोपे निमित्तं स्यादिति भावः।

(१४) स्वमोरिति षड्भ्यो लुगित्यतो (११४सू०) लुगित्यनुवर्त्तते अयञ्च लुक्। त्यदाद्यत्वस्य किमः कादेशस्य च बाधकः।

(१५) इदितो नुमित्यतः (७ २२सू०) नुमिति पदमनुवर्त्त्याह नुमागम इति विभक्ताविति किं मधुनो मधुन इदं माधवमित्यत्राचि मा भूत्।

घेर्ङितीति(१०८९०)गुणे प्राप्ते । वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो (१६) नुम् पूर्व्वविप्रतिषेधेन *। वारिणे । वारिणः । वारिणोः । नुमचिरेति(१२९६०)नुट, नामीति(८४९०)(१७) दीर्घः । वारीणाम् । वारिणि । वारिणोः । हलादौ हरिवत् ।

## तृतीयादिषु भाषितपुंस्कम्पुंवद्गालवस्य ।७। १ । ७४ ।

प्रवृत्तिनिमित्तैक्ये (१८) भाषितपुंस्कमिगन्तं क्लीबं पुंवद्वा स्याट्टादावचि । अनादये—अनादिने । इत्यादि । शेषं वारिवत् । पीलुर्वृक्षस्तत्फलम्पीलु तस्मै पीलुने । अत्र न पुंवत् प्रवृत्तिनिमित्तभेदात् (१९) ।

(१६) वृद्ध्यौत्वेति । अतिसखीनीत्यत्र सख्युरसम्बुद्धाविति(११३९०)णित्वाद्वृद्धिः वारिणीत्यत्र अच्च घेरिति (११०९०) औत्वं, प्रियक्रोष्टुनीत्यत्र तृज्वद्भावः वारिणे इत्यत्र घेर्ङितीति (१०८९०) गुणश्च प्राप्तः प्राप्नोति चरितार्थतया सावकाशत्वात् नुमा बाध्यन्ते इति भावः ।

(१७) नुम्नुटोः स्वरूपे विशेषाभावेऽपि नुमोऽङ्गावयवतया नामीति न दीर्घोऽतो दीर्घार्थमेव नुटा नुमो बाधनाय नुमचिरेत्याद्यारम्भः ।

(१८) भाषितः पुमान् येनेति विग्रहे पीलुशब्देऽतिप्रसङ्गः फलवाचकस्य तस्यैव वृक्षवाचित्वे पुंस्त्वादतः भाषितः पुमान् यस्मिन्नर्थे प्रवृत्तिनिमित्तरूपे इत्येव विग्रहस्ततो.गं आदित्यादपि शब्दपरत्वमित्याशयेन व्याचष्टे प्रवृत्तिनिमित्तैक्ये इति तथा च तुल्यार्थबोधकत्वे सति पुंस्त्वबोधकत्वं तथात्वमिति फलितम् इकोऽचि विभक्तावित्यतो (२४०) अचीत्यनुवर्त्तते । पुंवदिति वृद्धिनुमोरभावातिदेशः ।

(१९) प्रवृत्तिनिमित्तभेदादिति पीलुशब्दस्य वृक्षे प्रवृत्तौ तद्बोधक-

**अस्थिदधि(२०) सक्थ्यक्ष्णामनङुदात्तः । ७।१।७५ ।**

एषामनङ् स्याट्टादावचि स चोदात्तः । अल्लोपोऽनः (१०५पृ०) । दध्ना । दध्ने । दध्नः २ । दध्नोः २ । दध्नाम् । दध्नि दधनि शेषं वारिवत् । एवमस्थिसक्थ्यक्षि । तदन्तस्याप्यनङ् । अतिदध्ना । सुधि । सुधिनी । सुधीनि । हे सुधि-सुधे । सुधिया-सुधिना । सुधियाम्-सुधीनाम् । प्रध्या-प्रधिना । मधु । मधुनी । मधूनि । हे मधो हे मधु । एवमम्ब्वादयः । सानुशब्दस्य स्नुर्वा । स्नूनि-सानूनि । प्रियक्रोष्टु । प्रियक्रोष्टुनी । तृज्वद्भावात्पूर्वविप्रतिषेधेन(१४३पृ०)नुम् । प्रियक्रोष्टूनि । टादौ पुंवत्पक्षे-प्रियक्रोष्ट्रा-प्रियक्रोष्टुना । प्रियक्रोष्ट्रे-प्रियक्रोष्टवे । अन्यत्र तृज्वद्भावात् पूर्वविप्रतिषेधेन नुमेव । प्रियक्रोष्टुना । प्रियक्रोष्टुने । नुमचिरेति(१२३पृ०)नुट् । प्रियक्रोष्टूनाम् । सुलु । सुलुनी । सुलूनि । पुनस्तद्वत् । सुलुना-सुल्वा । धातृ । धातृणी । धातॄणि । हे धातः-हे धातृ । धात्रा धातृणा । एवं ज्ञातृकर्त्रादयः ।

**एच इग्घ्रस्वादेशे । १ । १ । ४८ ।**

आदिश्यमानेषु ह्रस्वेषु मध्ये एच इगेव स्यात् । प्रद्यु ।

---

तायाम् वृक्षत्वव्याप्यजातिरेव निमित्तं फले तु फलत्वव्याप्यजातिरित्यनयोर्भेदादित्यर्थः । पीलुशब्दात् विकारार्थे अण् तस्य च फले लुगिति (४।३। १६३सू०) लुगिति तस्य अश्रवणकता ।

(२०) अस्थिदधीति अस्थ्यादिशब्दानां प्रकरणात् दधीति नपुंसकमेव ग्राह्यं न तु धातुः क्विप्प्रत्ययनिष्पन्नमिति बोध्यम् ।

प्रध्युनी। प्रध्यूनि। प्रध्युनेत्यादि। इह न पुंवत् यदिगन्तं(२१)प्रध्यु इति तस्य भाषितपुंस्कत्वाभावात्। एवमग्रेऽपि। प्ररि। प्ररिणी। प्ररीणि। प्ररिणा। एकदेशविकृतस्याऽनन्यत्वाद्रायो हलीति(१२६सू०) आत्वम् प्रराभ्याम्। प्रराभिः। नुमचिरेति(१२२सू०)नुडात्वे प्रराणामिति माधवः। वस्तुतस्तु सन्निपातपरिभाषया नुडात्वन्न। नामीति(८४सू०)दीर्घस्यारम्भसामर्थ्यात्परिभाषां बाधत इत्युक्तम्। प्ररीणाम्। सुनु। सुनुनी। सुनूनि। सुनुना। सुनुने इत्यादि*।

इत्यजन्ता नपुंसकलिङ्गाः।

---

(२१) यदिगन्तमित्यादि एतच्च माधवमते प्राचीनमते तु प्रकृष्टस्वर्गवस्त्वादिरूपनिमित्तैक्यात् प्रध्योपशब्दो भाषितपुंस्कः स एव क्लीबे इगन्त इति न तयोर्भेदः अन्यथा सुधीपशब्दादिष्वपि न स्यात् दीर्घान्तस्यैव भाषितपुंस्कत्वेन क्लीबस्य च ह्रस्वतया तयोर्भेदादिति रूपसमीक्षणीयमिति तत्त्वबोधिन्याद्यनुसारिणः। तत्त्व०।

**हो ढः । ८ । २ । ३१ ।**

हस्य ढः स्याज्झलि (१) पदान्ते च । हल्ङ्याबिति (१११४०) सलोपः । पदान्तत्वात् हस्य ढः । जश्त्वचर्त्वे । लिट्—लिड् । लिहौ । लिहः । लिहम् । लिहौ । लिहः । लिहा । लिड्भ्याम् । लिट्सु—लिट्त्सु ।

**दादेर्धातोर्घः । ८ । २ । ३२ ।**

उपदेशे दादेर्धातोर्हस्य घः स्याज्झलि पदान्ते च । उपदेशे किम् । अधोगित्यत्र यथा स्यात् । दामलिहमात्मन इच्छति दामलिह्यति । ततः क्विपि दामलिट् । अत्र मा भूत् ।

**एकाचो बशो भष् झषन्तस्य स्ध्वोः । ८ । २ । ३७ ।**

धातोरवयवो य एकाच् झषन्तस्तदवयवस्य बशः स्थाने भष् स्यात्सकारे, ध्वशब्दे, पदान्ते च । एकाचो धातोरिति सामानाधिकरण्येनाऽन्वये तु इह न स्यात् गर्दभमाचष्टे गर्दभयति । ततः क्विपि णिलोपः गर्दप् । झलीति निवृत्तं स्ध्वोर्ग्रहणसामर्थ्यात्तेनेह न । दुग्धम् । दोग्धा । व्यपदेशिवद्भावेन (२)

---

(१) झलो झलीत्यतो (७४०पृ०) झलीति स्कोः संयोगाद्योरन्ते चेत्यतो (१६६पृ०) अन्ते इति चानुवर्त्य पदस्य (८।१।१६सू०) अधिकाराद्वा झलीत्यादि तत्र झलि परतः पूर्वस्य पदान्ते विद्यमानस्य च हस्येत्यर्थः एवमन्यत्रापि पदान्त इति पदस्य व्याख्या बोध्या ।

(२) ननु धातोरवयव इति वैयधिकरण्येनान्वये क्विबन्तइहेर्दादेरिति मतेन

धात्ववयवत्वाद्भष्भावः जश्त्वचर्त्वे। धुक् (२)। धुग्। दुहौ। दुहः। घत्वचर्त्वे। धुक्षु।

## वा (४) द्रुहमुहष्णुहष्णिहाम्। ८। २। ३३।

एषां हस्य वा घः स्याज्झलि पदान्ते च। पक्षे ढः। ध्रुक् ध्रुग् ध्रुट्-ध्रुड्। द्रुहौ। द्रुहः। ध्रुग्भ्याम् ध्रुड्भ्याम्। ध्रुक्षु ध्रुट्सु ध्रुट्त्सु। एवं मुहष्णुहष्णिहाम्।

## इग्यणः सम्प्रसारणम्। १। १। ४५।

यणः स्थाने प्रयुज्यमानो य इक् स सम्प्रसारणसंज्ञः स्यात्।

## वाह (५) ऊठ्। ६। ४। १३२।

भस्य वाहः सम्प्रसारणमूठ् स्यात्।

---

झषन्तत्वेऽपि भष्भावो न स्यात् दुघिति समुदायस्य यः पूर्वभाग एकाच् दु इति भागस्तस्य झषन्तत्वाभावात् अन्त्यभागस्य च उघित्यस्य एकाचः झषन्तत्वेऽपि न तत्र बशः सम्भव इत्याशङ्क्याह व्यपदेशिवद्भावेनेति विशिष्टोऽपदेशो मुख्यव्यवहारो व्यपदेशः, सोऽस्यास्तीति व्यपदेशी तेन तुल्यमित्यर्थः भष्भाव इति क्विपः प्राक् प्रवृत्तायां धातुसंज्ञायां निरपवादत्वेनावस्थितत्वाद्धादेरिति घादेशे कृते झषन्तत्वाक्षतेरिति भावः।

(२) धुगिति अलवन्तस्येति (१८४पृ०)सूत्रे ऽधातोरिति निषेधेन क्विबन्तस्याप्रधानक्रियावाचितया धातुत्वादिति भावः। एकाचः किं दामलिट्। बशः किं क्रोत्स्यति। झषन्तस्य किं दास्यतीत्यादौ मा भूत्।

(४) द्रुहेर्रादित्वात् प्राप्ते अन्येषामप्राप्ते इत्युभयत्र विभाषेयम्।

(५) वाह इति वहेः सम्प्रसारणमित्यतः (१८७पृ०) सम्प्रसारणमनुवर्त्य-मूठो विधेयत्वं तेनाल्लोपोऽनस्येति (२८पृ०) न प्रवर्तते।

**सम्प्रसारणाच्च (६) । ६ । १ । १०८ ।**

सम्प्रसारणादचि पूर्वरूपमेकादेशः स्यात् । एत्येधत्यूठ्सु(४२पृ०) । विश्वौहः । विश्वौहेत्यादि । छन्दस्येव (७) ण्विरिति पक्षे ण्विजन्तादिव ।

**चतुरनडुहोरामुदात्तः । ७ । १ । ९८ ।**

अनयोराम् स्यात्सर्वनामस्थाने (८) परे स चोदात्तः ।

**सावनडुहः (९) । ७ । १ । ८२ ।**

अस्य नुम् स्यात्सौ परे । आत् ( ) इत्यधिकारादवर्णात्परोऽयम् (१०) नुम् ।

अतोविशेषविहितेनाऽपि नुमाऽम् न बाध्यते । अमा (११)

---

(६) सम्प्रसारणाच्चेति अत्र अमि पूर्वरूप इत्यतः (९०पृ०) पूर्वरूप इति इकोयणचीत्यतो(२२पृ०) अचीति चानुवर्त्तते एकः पूर्वपरयोः (४२पृ०) इत्यधिकारः ।

(७) छन्दस्येवेति । वहश्चेति (३।२।६४सू०) सूत्रे भजो ण्विः, छन्दसि सह (३ । २ ।६३। ६३सू०) इत्यतो ण्विप्रत्ययस्य छन्दसीत्यस्य चानुवृत्तेरिति भावः । अकारान्तोपपद एव वाहः साधुरिति कैयटादयस्तेन भुवं वहतीत्यादौ भूवाडित्यादिः प्रयोगोऽसाधुरिति । भाष्ये तु प्रष्ठौह आगतः प्रष्ठवाड्रूप्यमिति प्रयोगात् लोकेऽपि वहः क्विबिति द्योतनाय पक्षे इत्यक्षरः सूचितः ।

(८) इतोऽत् सर्वनामस्थाने इत्यतः (१६९पृ०) सर्वनामस्थान इत्यनुवर्त्तते ।

(९)साविति । आच्छीनद्योर्नुमित्यतः(१६९पृ०)आदित्यधिकारात् नुमित्यनुवर्त्तते

(१०) आदित्यधिकारादिति । याडापः(७१६पृ०) ओर्गुणः (७२८पृ०) विशेषविहितेन नुमा अम् बाध्यतामित्याशङ्क्याऽवर्णात् पर इति उपजीव्योपजीवकभावेनाविरोधात् बाध्यबाधकभावो नास्तीति भावः ।

(११) अमा चेति अम् नुमुभावपि (१४९पृ०)विशेषविहितेनापीत्यर्थः । पुनः-प्रसङ्गविज्ञानात् समावेशादुभयमपि भवतीत्यर्थः । अमा चेति चकारा-

च नुम् न बाध्यते । सोर्लोपः । नुम्-(१२)-विधिसामर्थ्याद्-वसुस्रंस्विति दत्वन्न । संयोगान्तलोपस्याऽसिद्धत्वान्नलोपो न । अनड्वान् ।

**अम् सम्बुद्धौ । ७ । १ । ९९ ।**

चतुरनडुहोरम् स्यात्सम्बुद्धौ । आमोऽपवादः । हे अनड्वन् । अनड्वाहौ । अनड्वाहः । अनडुहः । अनडुहा ।

**वसुस्रंसुध्वंस्वनडुहां दः । ८ । २ । ७२ ।**

सान्तवस्वन्तस्य (१३) स्रंसादेश्च दः स्यात्पदान्ते । अनडुद्भ्यामित्यादि । सान्तेति किं विद्वान् । पदान्ते इति किं स्रस्तम् । ध्वस्तम् ।

**सहेः साडः सः । ८ । ३ । ५६ ।**

साड्रूपस्य सहेः सस्य मूर्धन्यादेशः । तुराषाट् । तुराषाड् । तुरासाहौ । तुरासाहः । तुराषाड्भ्यामित्यादि । तुरं सहते इत्यर्थे छन्दसि सहः इति (३।२।६३सू)ण्विः । लोके तु साहयतेः क्विप् । अन्येषामपीति (६।३।१३७सू०)पूर्वपदस्य दीर्घः ।

---

टिपाठे अनड्वांहौ इत्यत्र परत्वादामि कृते पुनःप्रसङ्गविज्ञानात् नपुंसकस्य झलचः (२६९सू०) इति नुम् नामा बाध्यते इत्यर्थः ।

(१२) नुम्विधिसामर्थ्यादिति सर्वनामस्थाने नुमा भवितव्यं न तु दत्वसंयोगान्तलोपनिमित्तेनेति भावः । किन्तु पदान्तरवर्णसन्निधाने सन्धिकार्यं स्यादेव तेन अनड्वांस्तत्र इत्यादौ नश्छव्यप्रशान् इत्यतः (९८सू०) रुत्वमिति बोध्यम् ।

(१३) वस्विति प्रत्ययस्यैव तदन्तं ग्राह्यं वसञ्जुषोरित्यतः (७७सू०) [illegible] वसन्तस्य विशेषणं तदेतदाह सान्तवस्वन्तस्येति पदान्ते इत्युक्तिः भाष्यादिव्याख्यानात् ।

